अथ

# बगलामुखीस्तोत्रं

प्रारभ्यते ।

संस्करण : जुलाई २०११, संवत् २०६८

मूल्य : १० रुपये मात्र ।



Printers & Publishers :
Khemraj Shrikrishnadass,
Prop: Shri Venkateshwar Press,
Khemraj Shrikrishnadass Marg, 7th Khetwadi,
Mumbai - 400 004.

Web Site : http://www.Khe-shri.com
Email : khemraj@vsnl.com

Printed by Sanjay Bajaj For M/s. Khemraj Shrikrishnadass Proprietors Shri Venkateshwar Press, Mumbai - 400 004, at their Shri Venkateshwar Press, 66 Hadapsar Industrial Estate, Pune 411 013.

श्रीगणेशाय नमः ॥ श्रीराधाकृ
ष्णाभ्यां नमः ॥ ॐ अस्य श्री
बगलामुखीस्तोत्रस्य भगवान्
नारदऋषिः।बगलामुखीदेवता।
ममसन्निहितानां विरोधिनां वा
दुःखपदबुद्धीनां स्तम्भनार्थे श्री

ब० स्तो० २

बगलामुखीवरप्रसादसिद्धयर्थे
जपेविनियोगः ॥ ॐ ह्लीम् अंगु
ष्ठाभ्यां नमः ॥ ॐ बगलामुखी
तर्जनीभ्यां स्वाहा ॥ ॐ सर्वदु
ष्टानां मध्यमाभ्यां वषट् ॥ ॐ
वाचं मुखं पदं स्तम्भय अना

मिकाभ्यां हूम् ॥ ॐ जिह्वा की
लय कीलय कनिष्ठिकाभ्यां वौ
षट् ॥ बुद्धिं नाशय ह्लीं ॐ स्वाहा
करतलकरपृष्ठाभ्यां फट् ॥ एवं
हृदयादिषु॥ अथ ध्यानम् ॥ सौ
वर्णासनिसंस्थितां त्रिनयनांपी

तांशुकोल्लासिनीं हेमाभांगरुचिं
शशाङ्कमुकुटां स्त्रक्चम्पकस्त्रग्यु
ताम् ॥ हस्तैर्मुद्गरपाशबद्धरशनां
संबिभ्रतीं भूषणव्याप्ताङ्गीं बग
लामुखीं त्रिजगतां संस्तम्भिनीं
चिन्तये ॥१॥ अथ मन्त्रः ॥ ॐ

ह्लीं बगलामुखि सर्वदुष्टानां वा
चं मुखं पदं स्तम्भय जिह्वां की
लय कीलय बुद्धिं नाशय ह्लीं ॐ
स्वाहा ॥ ॐ मध्येसुधाब्धिमणि
मण्डपरत्नवेदीसिंहासनोपरिग
तां परिपीतवर्णाम् ॥ पीताम्ब

राभरणमाल्यविभूषिताङ्गीं देवीं
भजामि धृतमुद्गरवैरिजिह्वाम् १।
जिह्वाग्रमादाय करेण देवीं वामे
न शत्रून् परिपीडयन्तीम् ।।गदा
भिघातेन च दक्षिणेन पीताम्ब
राढ्यां द्विभुजां भजामि ।। २।।

ॐचलत्कनककुंडलोल्लसितचा
रुगण्डस्थलां लसत्कनकचम्प
कद्युतिमदिन्दुबिम्बाननाम्।। ग
दाहतविपक्षकां कलितलोलजि
ह्वाञ्चलां स्मरामि बगलामुखीं
विमुखवाङ्मनस्तम्भिनीम् ।। ३।।

व॰
स्तो॰
५

पीयूषोदधिमध्यचारुविलसद्र
क्तोत्पलेमण्डपे तत्सिंहासनमौ
लिपातितरिपुं प्रेतासनाध्यासि
नीम्॥स्वर्णाभां करपीडितारिर
सनां भ्राम्यद्गदां विभ्रमामित्थं
ध्यायति यान्ति तस्य विलयं स

द्योऽथ सर्वापदः ॥ ४ ॥ देवि त्व
च्चरणाम्बुजार्चनकृते यः पात
पुष्पाञ्जलीन् भक्त्या वामकरे
निधाय च मनुं मन्त्री मनोज्ञा
क्षरम् ॥ पीठध्यानपरोऽथकुम्भ
कवशाद्बीजं स्मरेत्पार्थिवस्त

स्यामित्रमुखस्य वाचि हृदयं
जाड्यं भवेत्तत्क्षणात् ॥ ५ ॥
वादी मूकति रङ्कति क्षितिपति
वैश्वानरः शीतति क्रोधी शाम्य
ति दुर्जनः सुजनति क्षिप्रानुगः
खञ्जति ॥गर्वी खर्वति सर्वविच्च

जडाति त्वद्यन्त्रणायन्त्रितः श्री
नित्ये बगलामुखि प्रतिदिनं क
ल्याणि तुभ्यं नमः ॥ ६ ॥ मन्त्र
स्तावदलं विपक्षदलनस्तोत्रं प
वित्रं च ते यन्त्रं वादिनियन्त्रणं
त्रिजगतां जैत्रं च चित्रं च ते ॥

मातः श्रीबगलेति नाम ललितं
यस्यास्ति जन्तोर्मुखे त्वन्नामग्र
हणेन संसदि मुखस्तम्भो भवे
द्वादिनाम् ॥७॥ दुष्टस्तम्भनमु
ग्रविघ्नशमनं दारिद्र्यविद्रावणं भू
भृद्भीशमनं चलन्मृगदृशां चेतः

समाकर्षणम् ॥ सौभाग्यैकनि
केतनं समदृशः कारुण्यपूर्णामृत
मृत्योर्मारणमाविरस्तु पुरतो मा
तस्त्वदीयं वपुः ॥८॥ मातर्भैरव
मे विपक्षवदनं जिह्वां च संकीलय
ब्राह्मीं मुद्रय नाशयाशु धिषणा

मुग्रां गतिं स्तम्भय॥शत्रूंश्चूर्णय देवि तीक्ष्णगदया गौराङ्गि पीताम्बरे विघ्नौघं बगले हर प्रणमतां कारुण्यपूर्णेक्षणे ॥ ९ ॥ मातर्भैरवि भद्रकालि विजये वाराहि विश्वाश्रये श्रीविद्ये समये म

हेशि बगले कामेशि रामे रमे ॥
मातङ्गि त्रिपुरे परात्परतरे स्वर्गा
पवर्गप्रदे दासोऽहं शरणागतः
करुणया विश्वेश्वरि त्राहि माम्
॥ १० ॥ संरम्भे चौरसंघे प्रहर
णसमये बन्धने वारिमध्ये वि

द्यावादे विवादे प्रकुपितनृपता दिव्यकाले निशायाम्॥ वश्ये वा स्तम्भने वा रिपुवधसमये निर्जने वा वने वा गच्छंस्तिष्ठंस्त्रिकालं यदि पठति शिवं प्राप्नुयादाशु धीरः ॥११॥ नित्यं स्तोत्रमिदं

पवित्रमिह यो देव्याः पठत्याद
राद्धृत्वा यन्त्रमिदं तथैव समरे
बाहौ करे वा गले॥राजानोऽप्य
रयो मदान्धकरिणः सर्पा मृग
न्द्रादिकास्ते वै यान्ति विमोहि
ता रिपुगणा लक्ष्मीः स्थिराः सि

द्धयः ॥ १२॥ त्वांविद्या परमा त्रि
लोकजननी विघ्नौघसंछेदिनी
योषाकर्षणकारिणी त्रिजगता
मानन्दसंवर्द्धिनी ॥ दुष्टोच्चाटन
कारिणी जनमनः संमोहसंदा
यिनी जिह्वांकीलनभैरवी विज

यते ब्रह्मादिमन्त्रो यथा ॥१३॥
विद्यालक्ष्मीः सर्वसौभाग्यमायुः
पुत्रैःपौत्रः सर्वसाम्राज्यसिद्धिः।
मानं भोगो वश्यमारोग्यसौख्यं
प्राप्तंतत्तद्भूतलेऽस्मिन्नरेण।१४॥
यत्कृतं जपसन्नाहं गदितं परमे

श्वरि॥दुष्टानां निग्रहार्थाय तद्गृहाण नमोऽस्तुते ॥१५॥ ब्रह्मास्त्रमिति विख्यातं त्रिषु लोकेषु विश्रुतम्॥गुरुभक्ताय दातव्यं न देयं यस्य कस्यचित् ॥१६॥ पीताम्बरां च द्विभुजां त्रिनेत्रां गा

त्रकाञ्ज्वलाम् ॥ शिलामुद्गरह
स्तां च स्मरेत्तां बगलामुखीम्॥
॥ १७ ॥

इति श्रीरुद्रयामले बगलामु-
खीस्तोत्रं समाप्तम् ॥

इति

बगलामुखीस्तोत्रं

समाप्तम् ।

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर, मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट, पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५, फैक्स -०२०-२६८७४९०७.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डिंग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष - ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-२४२००७८.

KHEMRAJ SHRIKRISHNADASS